TRIVANDRUM SANSKRIT SERIES.

NO. XXI.

THE

# BÂLACHARITA

OF

## BHÂSA

EDITED WITH NOTES

 BY

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

Bhasa's Works:—No. 5.



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.



TRIVANDRUM:
PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.
1912.

अनन्तशयनसंस्कृतग्रन्थावलिः.

ग्रन्थाङ्कः २१.

---

# बालचरितं

## महाकविश्रीभासप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितं

लघुटिप्पण्या च संयोजितम् ।

भासनाटकचक्रे पञ्चमम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।




---

कोलम्बाब्दाः १०८८, क्रैस्ताब्दाः १९१२.

# PREFACE.

This is termed *Bâlacharita* because it describes the feats performed by the young Srî Krishna from the sucking of the life of *Pûtanâ* to the end of taking away the vital spirit of *Kamsa*.

In the verse,

"विन्ध्यमन्दरसारोऽयं बालः पद्मदलेक्षणः ।
गर्भे यया धृतः श्रीमानहो धैर्यं हि योषितः ॥ १२ ॥"

of the first Act the sentence "अहो धैर्यं हि योषितः" must be explained by supplying the ellipsis तस्याः suggested by the word यया. In so doing we have to lose the elegance of the meaning of the sentence denoted by the particle हि that it is a general enunciation of a case deduced from a particular one: Hence the reading should be 'गर्भेऽनया धृतः'. 'य' might have been ignorantly inserted in the original manuscript by the scribe in the place of 'न'. 'अनया' means 'देवक्या'.

TRIVANDRUM. T. GANAPATI SÂSTRÎ.

# निवेदना ।

---

'बालचरितम्' इति बालस्य श्रीकृष्णस्य चरितं पूतनाप्राणचूषणादि कंसहननान्तमत्र वर्ण्यत इति कृत्वा । प्रथमाङ्कस्थे

"विन्ध्यमन्दरसारोऽयं बालः पद्मदलेक्षणः ।
गर्भे यया धृतः श्रीमानहो धैर्यं हि योषितः ॥ १२ ॥"

इत्यस्मिन् पद्ये 'यया' इति यत्पदोपादानानुरोधात् 'तस्या' इत्यध्याहारेण 'अहो धैर्यं हि योषितः' इति वाक्यं पूरणीयम् । एवं तु अस्य वाक्यस्य हिशब्दस्वरस-गम्यम् उक्तार्थसमर्थकसामान्यवाक्यरूपत्वमनादृतं स्यात् । अतो 'गर्भेऽनया धृतः' इति पाठः कर्तुं युक्तः । नकारस्थाने च प्रमादाद् यकारो मातृकायां लेखकेन निवेशितः स्यात् । 'अनया' इत्यस्य देवक्येत्यर्थः ।

अनन्तशयनम्. त. गणपतिशास्त्री.

# पात्राणि ।

पुरुषाः—

नारदः = देवर्षिः ।
वसुदेवः = कृष्णस्य जनकः ।
नन्दगोपः = वसुदेवस्य मित्रं गोकुलाध्यक्षः ।
उग्रसेनः = कंसस्य पिता ।
दामोदरः
सङ्कर्षणः } = भगवन्तौ वसुदेवसुतौ ।
गरुडः = विष्णोर्वाहनम् ।
चक्रः = तदभिमानिदेवता ।
शार्ङ्गः = तदभिमानिदेवता ।
शङ्खः = तदभिमानिदेवता ।
नन्दकः = तदभिमानिदेवता ।
राजा = मथुराधीशः ।
चाणूरः
मुष्टिकः } = मल्लविशेषौ कंससम्बन्धिनौ ।
भटः = कंसस्य भृत्यो ध्रुवसेननामा ।
काञ्चुकीयः = कंसस्य भृत्यो बालाकिनामा ।
शापः = शापाधिदेवता ।
सर्वे = रक्षिपुरुषाः ।
कुण्डोदरः
शूलः
नीलः
मनोजवः } = कात्यायन्या भृत्याः ।
वृद्धगोपालकः = कश्चिद् गोपालकः ।

| | | |
|---|---|---|
| दामकः | = | कश्चिद् गोपालकः । |
| गोपालकः | = | दामकः । |
| अरिष्टर्षभः | = | असुरविशेषः । |
| कालियः | = | यमुनाह्रदनिवासी महानागः । |

**स्त्रियः—**

| | | |
|---|---|---|
| देवकी | = | कृष्णस्य जननी । |
| प्रतिहारी | = | देवक्या द्वारपालिका । |
| धात्री | = | मायादारिकाया उपमाता । |
| सर्वाः | = | चण्डालयुवतयः । |
| कात्यायनी | = | कंसहस्तादुत्प्लुत्याकाशस्थिता देवी । |
| सर्वाः | = | गोप्यो घोषसुन्दर्यादयः । |
| राज्यश्रीः | = | राज्याधिदेवता । |
| प्रतिहारी | = | कंसस्य द्वारपालिका मधुकरिका । |
| प्रतिहारी | = | कंसस्य द्वारपालिका यशोधरा । |
| कौमोदकी | = | तदभिमानिदेवता । |



॥ श्रीः ॥

श्रीगणेशाय नमः

महाकविश्रीभासप्रणीतं

# बालचरितम् ।

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

शङ्खक्षीरवपुः पुरा कृतयुगे नाम्ना तु नारायण-
स्त्रेतायां त्रिपदार्पितत्रिभुवनो विष्णुः सुवर्णप्रभः ।
दूर्वाश्यामनिभः स रावणवधे रामो युगे द्वापरे
नित्यं योऽञ्जनसन्निभः कलियुगे वः पातु दामोदरः ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

अहं गगनसञ्चारी।

**सूत्रधारः**— भवतु, विज्ञातम् ।

पतत्यसौ पुष्पमयी च वृष्टि-
र्नदन्ति तूर्याणि च देवतानाम् ।

द्रष्टुं हरिं वृष्णिकुले प्रसूत-
मभ्यागतो नारद एष तूर्णम् ॥ २ ॥

(निष्क्रान्तः)

(ततः प्रविशति नारदः)

नारदः—

अहं गगनसञ्चारी त्रिषु लोकेषु विश्रुतः ।
ब्रह्मलोकादिह प्राप्तो नारदः कलहप्रियः ॥ ३ ॥

भोः!

क्षीणेषु देवासुरविग्रहेषु
नित्यप्रशान्ते न रमेऽन्तरिक्षे ।
अहं हि वेदाध्ययनान्तरेषु
तन्त्रीश्च वैराणि च घट्टयामि ॥ ४ ॥

अपिच,

भक्तिः परा मम पितामहभाषितेषु
सर्वाणि मे बहुमतानि तपोवनानि ।
सत्यं ब्रवीमि करजाग्रहता च वीणा
वैराणि भीमकठिनाः कलहाः प्रिया‡ मे ॥ ५ ॥

तद् भगवन्तं लोकादिमनिधनमव्ययं लोकहितार्थे कंसवधार्थं वृष्णिकुले प्रसूतं नारायणं द्रष्टुमिहागतोऽस्मि । अये इयमत्र-

---

‡ प्रियापदार्थो वीणयान्वेति, वैरादौ लिङ्गवचनविपरिणामेन

भवती देवकी । मायया शिशुत्वमुपागतं त्रिलोकेश्वरं प्रगृह्य वसुदेवेन सह शनैः स्वगृहान्निष्क्रामति । यैषा,

लोकानामभयकरं गुरुं सुराणां
दैत्यानां निधनकरं रथाङ्गपाणिम् ।
शोकार्ता शशिवदना निशि प्रशान्ता
बाहुभ्यां गिरिमिव मन्दरं वहन्ती ॥ ६ ॥

एष एष भगवान् नारायणः,

अनन्तवीर्यः कमलायताक्षः
सुरेन्द्रनाथोऽसुरवीर्यहन्ता ।
त्रिलोककेतुर्जगतश्च कर्ता
भर्ता जनानां पुरुषः पुराणः ॥ ७ ॥

हन्तैतदुत्पन्नं कलहस्य मूलम् । यावदहमपि भगवन्तं नारायणं प्रदक्षिणीकृत्य ब्रह्मलोकमेव यास्यामि । नमो भगवते त्रैलोक्यकारणाय ।

नारायणाय नरलोकपरायणाय
लोकाननाय कमलामललोचनाय ।
रामाय रावणविरोचनपातनाय
वीराय वीर्यनिलयाय नमो वराय ॥ ८ ॥

(निष्क्रान्तः)

( ततः प्रविशति बालहस्ता देवकी )

देवकी—(क) हद्धि, पुत्तअस्स मे महाणुभावत्तणं सूअइस्सन्दाणि जम्मसमअसमुब्भूदाणि महाणिमित्ताणि पच्चक्खीकरअन्ती अवि कंसहद(अ)णिसंसत्तणं चिन्तअन्ती सुट्ठु ण पच्चआमि मन्दभाइणी। कहिंणु गदो अय्यउत्तो। (परिक्रम्य अग्रतो विलोक्य ) अम्मो एसो अय्यउत्तो हरिसविह्मअफुळ्ळणअणो इदो एव्व आअच्छदि।

(ततः प्रविशति वसुदेवः )

वसुदेवः—(सविमर्शम्) भोः! किन्नुखल्विदम्।

भ्रमति नभसि विद्युच्चण्डवातानुविद्धै-
र्नवजलदनिनादैर्मेदिनी सप्रकम्पा।
इह तु (रहसि) नूनं रक्षणार्थं प्रजाना-
मसुरसमितिहन्ता विष्णुरद्यावतीर्णः॥ ९॥

(विलोक्य) एषा देवकी,

अगणितपरिखेदा याति षण्णां सुताना-
मपचयगमनार्थं सततं रक्षमाणा$।

---

(क) हा धिक्, पुत्रकस्य मे महानुभावत्वं सूचयिष्यन्ति जन्मसमयसमुद्भूतानि महानिमित्तानि प्रत्यक्षीकुर्वत्यपि कंसहतकनृशंसत्वं चिन्तयन्ती सुष्ठु न प्रत्येमि मन्दभागिनी। क्वनु गत आर्यपुत्रः। अम्मो एष आर्यपुत्रो हर्षविस्मयफुल्लनयन इत एवागच्छति।

---

$ रक्षमाणा रक्षणशीला।

बहुगुणकृतलोभा जन्मकाले निमित्तैः
सुत इति कृतसंज्ञं कंसमृत्युं वहन्ती ॥१०॥

**देवकी**—(उपसृत्य) (क) जेदु अय्यउत्तो ।

**वसुदेवः**—देवकि ! अर्धरात्रं खलु वर्तते । प्रसुप्तो *मथुरायां सर्वो जनः। तस्माद् यावन्न कश्चित् पश्यति, तावद् बालं गृहीत्वापक्रामामि ।

**देवकी**—(ख) कहिं अय्यउत्तो इमं णइस्सदि ।

**वसुदेवः**—देवकि ! सत्यं ब्रवीषि। अहमपि न जाने। किन्तु, एकच्छत्रच्छायां पृथिवीं समाज्ञापयति दुरात्मा कंसः। तत् क्व नु खल्वयमायुष्मान् नेतव्यो भविष्यति । अथवा यत्र दैवं विधास्यति, तत्र बालं गृहीत्वापक्रामामि ।

**देवकी**—(ग) अय्यउत्त ! इच्छामि दाव णं सुदिट्ठं कत्तुं।

**वसुदेवः**—अयि अतिपुत्रवत्सले !

किं द्रष्टव्यः शशाङ्कोऽयं राहोर्वदनमण्डले ।
त्वयाप्यस्य सुदृष्टस्य कंसो मृत्युर्भविष्यति ॥११॥

---

(क) जयत्वार्यपुत्रः ।

(ख) क्वार्यपुत्र इमं नेष्यति ।

(ग) आर्यपुत्र ! इच्छामि तावदेनं सुदृष्टं कर्तुम् ।

---

* तवर्गाद्द्वितीयमध्यो मथुराशब्दः प्रसिद्धः ।

**देवकी**—(क) सव्वहा ण भविस्सदि ।

**वसुदेवः**—यद् भवत्याभिहितं, तत् सर्वदैवतैरभिहितं भवतु । आनय ।

**देवकी**—(ख) गह्णदु अय्यउत्तो ।

**वसुदेवः**—(गृहीत्वा) अहो गुरुत्वं बालस्य । साधु,

विन्ध्यमन्दरसारोऽयं बालः पद्मदलेक्षणः ।
गर्भे यया धृतः श्रीमानहो धैर्यं हि योषितः ॥ १२ ॥

देवकि! प्रविश त्वमभ्यन्तरम् ।

**देवकी**—(ग) एसा गच्छामि मन्दभाआ । (निष्क्रान्ता)

**वसुदेवः**—एषा देवकी,

हृदयेनेह तत्राङ्गैर्द्विधाभूतेव गच्छति ।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता‡ ॥ १३ ॥

हन्त प्रविष्टा देवकी । यावदहमपि नगरद्वारं संश्रयामि एष भोः,

---

(क) सर्वथा न भविष्यति ।
(ख) गृह्णात्वार्यपुत्रः ।
(ग) एषा गच्छामि मन्दभागा ।

---

‡ 'गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः । चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥' इति शाकुन्तलश्लोक एतच्छायायोनिर्नूनम् ।

प्रथमसुतविनाशजातमन्यु-
नृपतिभयाकुलितः प्रगृह्य बालम्।
त्वरिततरमिह प्रयामि मार्गे
गिरिमिव मन्दरमुद्वहन् भुजाभ्याम् ॥१४॥

(परिक्रम्य) इदं नगरद्वारम्। यावत् प्रविशामि। (प्रविश्य) अये प्रसुप्तो मधुरायां सर्वो जनः। यावदपक्रामामि। (परिक्रम्य) निष्क्रान्तोऽस्मि मधुरायाः। अहो बलवांश्चायमन्धकारः। सम्प्रति हि,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥१५॥

अहो तमसः प्रभुत्वम्।

अप्रकाशा इव दिशो घनीभूता इव द्रुमाः।
सुनिविष्टस्य लोकस्य कुतो रूपविपर्ययः ॥ १६ ॥

नाहं गन्तुं समर्थः। अये दीपिकालोकः। किन्नुखलु दुरात्मा कंसो ममापक्रमणं ज्ञात्वा दीपिकाभिः परिवृतो मां ग्रहीतुमागतो भवेत्। भवत्वहमस्य दर्पप्रशमनं करोमि। (खड्गमुत्कोशयति) (निवृत्यावलोक्य) अये न कश्चिद् दृश्यते। आ,

तमसा संवृते लोके मम मार्गमपश्यतः।
अपक्रमणहेतोस्तु कुमारेण प्रभा कृता ॥ १७ ॥

एष मार्गः। यावदपक्रामामि। अये इयं भगवती यमुना कालवर्षसम्पूर्णा (स)न्नि(हि)ता। अहो व्यर्थो मे परिश्रमः। किमिदानीं करिष्ये। भवतु, दृष्टम्।

इमां नदीं ग्राहभुजङ्गसङ्कुलां
महोर्मिमालां मनसापि दुस्तराम्।
भुजप्लवेनाशु गतार्थविक्लबो
वहामि सिद्धिं यदि दैवतं स्थितम्॥ १८॥

(तथा कृत्वा सविस्मयम्) हन्त द्विधा छिन्नं जलम्, इतः स्थितम्, इतः प्रधावति। दत्तो मे भगवत्या मार्गः। यावदपक्रामामि। (अवतीर्य) निष्क्रान्तोऽस्मि यमुनायाः। अये हुङ्कारशब्द इव श्रूयते। व्यक्तं घोषसमीपे वर्तते मन्दभाग्यः। आ, अत्र च समीपघोषे मम वयस्यो नन्दगोपः प्रतिवसति। स खलु मया कंसाज्ञया निगलितः कशाभिहतश्च। यावत् प्रविशामि। अथवा रात्रौ वसुदेवः प्रविष्ट इति शङ्किता गोपालका भविष्यन्ति। तस्मादिह न्यग्रोधपादपस्याधस्तात् प्रभातवेलां रजन्याः प्रतिपालयामि। भो भो न्यग्रोधदेवताः! यद्ययं बालो लोकहितार्थः कंसवधार्थं वृष्णिकुले प्रसूतश्चेद्, घोषात् कश्चिदिहागच्छतु। न, न, मम वयस्यो नन्दगोप एवागच्छतु।

(ततः प्रविशति दारिकां गृहीत्वा नन्दगोपः)

नन्दगोपः—(सशोकम्) (क) दाळिए! दाळिए! किं दाणि

---

(क) दारिके! दारिके! किमिदानीं नो गेहलक्ष्म्यां न रत्वा ततो न उज्झित्वा

णो गेहळषिं णळामिअ तदो णो उज्झिअ णं गच्छषि । षम्पदि हि महिषषदसम्पादषदिषं अहो बळिअं अन्धआळं ।

दुद्दिणविणट्ठजोह्ला ळत्ती वट्टइ णिमीळिआकाळा ।
षम्पाउदप्पषुत्ता णीळणिवषणा जहा गोवी ॥ १९ ॥

अज्ज हि अड्ढळत्ते अह्माणं कुडुम्बिणीए जषोदाए पषूदा इअं च दाळी तवष्षिणी जादमत्ता एव्व ओग्गदप्पाणा षंवुत्ता । षुवे अह्माणं घोषष्ष उइदो इन्दयञ्ञो णाम उष्षवो भविष्षदि । ता मां खु एदं दुक्खं गोवजणेहि अणुहूअमाणं त्ति मए एक्का-इणा णिगळगुळुचळणेण इमं दाळिअं गह्निअ *णिग्गदो ह्मि । जषोदा वि तवष्षिणी णैव जाणादि दाळओ वा दाळिआ वा पषूद त्ति मोहं गदा । दाळिए ! दाळिए ! ।

---

ननु गच्छसि । संप्रति हि महिषशतसंपातसदृशमहो बलवदन्धकारम् ।

दुर्दिनविनष्टज्योत्स्ना रात्रिर्वर्तते निमीलिताका(रा ? शा) ।
संप्रावृतप्रसुप्ता नीलनिवसना यथा गोपी ॥ १९ ॥

अद्य ह्यर्धरात्रेऽस्माकं कुटुम्बिन्या यशोदया प्रसूतेयं च दारी तपस्विनी जात-मात्रैवापगतप्राणा संवृत्ता । श्वोऽस्माकं घोषस्योचित इन्द्रयज्ञो नामोत्सवो भविष्यति । तद् मा खल्वेतद् दुःखं गोपजनैरनुभूयमानामिति मयैकाकिना निगलगुरुचरणेनेमां दारिकां ग्राहयित्वा निर्गतोऽस्मि । यशोदापि तपस्विनी नैव जानाति दारको वा दारिका वा प्रसूत इति मोहं गता । दारिके ! दारिके ! ।

---

* 'णिग्गदो ह्मि' इत्यस्य स्थाने 'णिग्गदं' इति पठनीयं भाति । अथवा 'गह्निअ' इत्यस्य ग्राहयित्वेत्यर्थो विवक्षणीयः, अहमर्थस्य च प्रयोज्यकर्तृत्वं प्रयोजककर्तृत्व चेत्युभयं विवक्षणीयम् । उभयविवक्षा चात्मनो दारिकाग्रहणे स्वरसतोऽप्रवृत्तिं सूचयितुम् ।

**वसुदेवः**—को नु खल्वयं रात्रौ परिदेवयति । अस्मत्सब्रह्मचारी खल्वयं तपस्वी ।

**नन्दगोपः**—(क) किं दाणिं णो गेहळच्छिं णळमिअ तदो णो उज्झिअ णं गच्छषि ।

**वसुदेवः**—स्वरेण प्रत्यभिजानामि । मम वयस्येन नन्दगोपेन भवितव्यम् । यावच्छब्दापयामि । वयस्य नन्दगोप ! इतस्तावत् ।

**नन्दगोपः**—(सभयम्) (ख) अविहा को दाणि मं षुदपुव्वेण विअ षळयोगेण णन्दगोव ! णन्दगोव ! त्ति मं षद्दावेदि । किण्णु ळक्खशो वा, आदु पिषाषो वा । ईदिसीए पदिभअळअणीए मदळिआ दाळिआ मम हत्थे । किंणुहु कळिष्षं ।

**वसुदेवः**—वयस्य नन्दगोप ! अलमन्यशङ्कया । इतस्तावत् ।

**नन्दगोपः**—(कर्णं दत्त्वा । सावधानम्) (ग) अम्मो षळयोगेण भट्टा वषुदेव त्ति जाणामि । जाव उवषप्पिष्षं । अहव तहि मम किं कय्यं । एदिणा कंषष्ष ळञ्जो वअणं षुणिअ अवळद्धो

---

(क) किमिदानीं नो गेहलक्ष्म्यां नरन्त्वा ततो न उज्झित्वा ननु गच्छसि।

(ख) अविहा क इदानीं मां श्रुतपूर्वेणेव स्वरयोगेन नन्दगोप! नन्दगोप! इति मां शब्दयति। किंनु राक्षसो वा, उत पिशाचो वा । ईदृश्यां प्रतिभयरजन्यां मृता दारिका मम हस्ते । किन्नुखलु करिष्यामि ।

(ग) अम्मो स्वरयोगेन भर्ता वसुदेव इति जानामि । यावदुपसर्पामि ।

कषाहि ताळिअ णिअळेहि बद्धो म्हि । ता ण गमिष्षं । अहव धिक्खु मे णिषंषभावं । मम गुणषहष्षं किदं, दुक्खे दुक्खइ, षुहे षुहिणो होदि, तहवि षुमळामि ळाअषाषणेण किदं एक्कबन्धणं । जाव उवषप्पिष्षं । इयं दाळी । किं कळिष्षं । होदु एवं दाव कळिष्षं । (उपसृत्यावलोक्य च । सविस्मयम्) पभादा ळअणी । एषो भट्टा वषुदेवो दाळअं गह्णिअ ट्ठिदो । (उपसृत्य) जेदु भट्टा जेदु ।

**वसुदेवः**—वयस्य नन्दगोप! अपि भगवतीभ्यो गोभ्यः कुशलम् ।

**नन्दगोपः**—(क) आम भट्टा! कुषळं ।

**वसुदेवः**—अथ भवतः परिजनस्य कुशलम् ।

**नन्दगोपः**—(ख) परिजणमिति । आम भट्टा! कुषळं ।

**वसुदेवः**—वयस्य! किमिदानीं प्रच्छाद्यते ।

---

अथवा तत्र मम किं कार्यम् । एतेन कंसस्य राज्ञो वचनं श्रुत्वापराद्धः कशाभिस्ताडयित्वा निगलैर्बद्धोऽस्मि । तन्न गमिष्यामि । अथवा धिक् खलु मे नृशंसभावम् । मम गुणसहस्रं कृतं, दुःखे दुःख्यति, सुखे सुखी भवति, तथापि स्मरामि राजशासनेन कृतमेकबन्धनम् । यावदुपसर्प्स्यामि । इयं दारी । किं करिष्यामि । भवत्वेवं तावत् करिष्यामि । प्रभाता रजनी । एष भर्ता वसुदेवो दारकं गृहीत्वा स्थितः । जयतु भर्ता जयतु ।

(क) आम भर्तः! कुशलम् ।

(ख) परिजनमिति । आम भर्तः! कुशलम् ।

**नन्दगोपः**—(क) भट्टा! णत्थि किञ्चि।

**वसुदेवः**—मम खलु प्राणैः शापितः स्याद्, यदि सत्यं न ब्रूयात्।

**नन्दगोपः**—(ख) का गई। षुणादु भट्टा। अज्ज अड्ढ-ळत्ते अह्माणं कुडुम्बिणी(ए), णहि णहि, तुह्माणं दाषीए जषोदाए पषूदा इअं च दाळी तवष्षिणी जादमत्ता एव्व ओग्गदप्पाणा षंवुत्ता। षुवे अह्माणं घोषष्ष उइदो इन्दयञ्ञो णाम उष्षवो भविष्षदि। ता मा खु एदं दुक्खं गोवजणेहि अणुहूअमाणं त्ति मए एकाइणा णिगळगुळुचळणेण इमं दाळिअं गह्णिअ णिग्गदो ह्मि। जषोदा वि तवष्षिणी णैव जाणादि दाळओ दाळिआ वा पषूद त्ति मोहं गदा।

**वसुदेवः**—हन्त भोः! न शक्यं लोकस्याधिष्ठानभूतं कृतान्तं वञ्चयितुम्। वयस्य! काष्ठभूतं कलेबरं त्यज्यताम्।

**नन्दगोपः**—(ग) ण षक्कुणोमि भट्टा! ण षक्कुणोमि।

**वसुदेवः**—ईदृशो लोकधर्मः। त्यज्यताम्।

---

(क) भर्तः! नास्ति किंचित्।

(ख) का गतिः। शृणोतु भर्ता। अद्यार्धरात्रेऽस्माकं कुटुम्बिन्या, नहि नहि, युष्माकं दास्या यशोदया प्रसूतेयं च दारी तपस्विनी जातमात्रैवापगतप्राणा संवृत्ता। श्वोऽस्माकं घोषस्योचित इन्द्रयज्ञो नामोत्सवो भविष्यति। तद् मा खल्वेतद् दुःखं गोपजनैरनुभूयमानमिति मयैकाकिना निगळगुरुचरणेनेमां दारिकां ग्राहयित्वा निर्गतोऽस्मि। यशोदापि तपस्विनी नैव जानाति दारको दारिका वा प्रसूत इति मोहं गता।

(ग) न शक्नोमि भर्तः! न शक्नोमि।

**नन्दगोपः**—(क) जं भट्टा आणवेदि। दालिए! दालिए! (इति रोदिति)

**वसुदेवः**—वयस्य! अलमलं रुदितेन। उत्तिष्ठोत्तिष्ठ।

**नन्दगोपः**—(तथा कृत्वोपगम्य) (ख) जेदु भट्टा। इमिणा दाषजणेण किं कत्तव्वं।

**वसुदेवः**—वयस्य! ननु त्वमपि जानासि दुरात्मना कंसेन मम षट् पुत्रा निधनमुपानीता इति।

**नन्दगोपः**—(ग) जाणामि भट्टा! जाणामि।

**वसुदेवः**—तत् सप्तमोऽयं दीर्घायुः। नास्ति मम पुत्रेषु भाग्यम्। तव भाग्याज्जीवितुं गृह्यताम्।

**नन्दगोपः**—(घ) भाआमि भट्टा! भाआमि। जदि कंषो ळाआ षुणादि—वषुदेवष्ष दाळओ णन्दगोवष्ष हत्थे णाषो णिक्खित्तो त्ति, किं बहुणा, गदं एव्व मे षीषं।

---

(क) यद् भर्ताज्ञापयति। दारिके! दारिके!।

(ख) जयतु भर्ता। अनेन दासजनेन किं कर्तव्यम्।

(ग) जानामि भर्तः! जानामि।

(घ) बिभेमि भर्तः! बिभेमि। यदि कंसो राजा शृणोति—वसुदेवस्य दारको नन्दगोपस्य हस्ते न्यासो निक्षिप्त इति, किं बहुना, गतमेव मे शीर्षम्।

**वसुदेवः**—(आत्मगतम्) हन्त विपन्नं कार्यम् । उत्कण्ठाः खलु नृशंसाः । तदेवं कथयामि । (प्रकाशम्) वयस्य नन्दगोप !

यद्यस्मि भवतः किञ्चिन्मया पूर्वकृतं भवेत् ।
तस्य प्रत्युपकारस्य कालस्ते समुपागतः ॥ २० ॥

**नन्दगोपः**—(क) किं किं पच्चुवकाळं त्ति । जदि कंषो वा होदु, कंषष्ष पिदा उग्गषेणो वा होदु । आणेदु भट्टा दाळअं ।

**वसुदेवः**—वयस्य ! गृह्यताम् ।

**नन्दगोपः**—(ख) भट्टा ! अचोक्खिदह्मि, मदळिआ दाळिआ गहीदा । मुहुत्तअं पडिवाळेदु भट्टा । जाव जमुणाह्(ळं?ळअं) गच्छिअ चोक्खं कळेमि ।

**वसुदेवः**—वयस्य ! घोषवासात् प्रकृत्या शुचिरेव भवान् ।

**नन्दगोपः**—(ग) तेण हि अह्माणं घोषष्ष उइदं पङ्सुणा चोक्खं कळेमि ।

---

(क) किं किं प्रत्युपकार इति । यदि कंसो वा भवतु, कंसस्य पितोग्रसेनो वा भवतु । आनयतु भर्ता दारकम् ।

(ख) भर्तः ! अशौचितोऽस्मि, मृता दारिका गृहीता । मुहूर्तकं प्रतिपालयतु भर्ता, यावद् यमुनाह्रदं गत्वा शौचं करोमि ।

(ग) तेन ह्यस्माकं घोषस्योचितं पांसुना शौचं करोमि ।

**वसुदेवः**— कोऽत्र दोषः । क्रियतां शौचम् ।

**नन्दगोपः**— (क) जं भट्टा आणवेदि । (तथा कुर्वन् सविस्मयम्) अच्छलीअं अच्छलीअं भट्टा! अच्छलीअं। पङ्कूणि मग्गमाणष्ष धळणीं भिन्दिअ जुगप्पमाणा षलिळधाळा उट्ठिदा ।

**वसुदेवः**— बालस्यैव प्रभावः । क्रियतां शौचम् ।

**नन्दगोपः**— (ख) भट्टा! तह । (तथा कृत्वोपसृत्य) भट्टा ! अअह्मि ।

**वसुदेवः**— गृह्यताम् ।

**नन्दगोपः**— (ग) भट्टा! अदिदुब्बळा मे बाहा मन्दलष-दिषं बाळअं गह्णिदुं ण षमत्था ।

**वसुदेवः**— वयस्य! महाबलपराक्रमः खलु भवान् ।

**नन्दगोपः**— (घ) षुणादु भट्टा मम बळ(पळ)क्कमं । षन्दा-ळिअमाणे वषभे षिङ्गं गह्णिअ मोचेमि । पङ्कुणिमग्गाणि भण्ड-षअडआणि आघट्टआमि । ईदिषो दाणि अहं दाळअं गह्णिउं ण षमत्थो ह्मि ।

---

(क) यद् भर्ताज्ञापयति । आश्चर्यमाश्चर्यं भर्तः! आश्चर्यम् । पांसून् मार्गयतो धरणीं भित्त्वा युगप्रमाणा सलिलधारोत्थिता ।

(ख) भर्तः! तथा । भर्तः! अयमस्मि ।

(ग) भर्तः! अतिदुर्बलौ मे बाहू मन्दरसदृशं बालकं ग्रहीतुं न समर्थौ ।

(घ) शृणोतु भर्ता मम बलपराक्रमम् । सन्दारयमाणे वृषभे शृङ्गं गृहीत्वा

(ततः प्रविशन्ति पञ्चायुधानि गरुडश्च)

गरुडः—

अहं सुपर्णो गरुडो महाजवः
शार्ङ्गायुधस्यास्य रथो ध्वजश्च ।
पुरा हि देवासुरविग्रहेषु
वहामि भो विष्णुबलेन विष्णुम् ॥ २१ ॥

चक्रः—

‡चक्रोऽस्मि कृष्णस्य कराग्रशोभी
मध्याह्नसूर्यप्रतिमोग्रतेजाः ।
त्रिविक्रमे चामृतमन्थने च
मया हता दानवदैत्यसङ्घाः ॥ २२ ॥

शार्ङ्गः—

शार्ङ्गोऽस्मि विष्णुकरलग्नसुवृत्तमध्या
स्त्री विग्रहात् पुरुषवीर्यबलातिदर्पा ।
*यस्यार्थमाहवमुखेषु मयारिसङ्घाः
प्रभ्रष्टनागरथवाजिनराः प्रभग्नाः(?) ॥ २३ ॥

---

मोचयामि । पङ्कनिमग्नान् भाण्डशकटकान् आघट्टयामि । ईदृश इदानीमहं दारकं ग्रहीतुं न समर्थोऽस्मि ।

---

‡ चक्र इति तदभिमानिदेवाभिप्रायं पुंस्त्वम् । एवं शार्ङ्ग इति । * यस्यार्थमिति यस्य विष्णोरर्थे इत्यर्थः । एवन्तु यदर्थमिति समासेन भाव्यम् । ‘अस्यार्थं आहवमुखेषु’ इत्येव वा पाठो भवेत् । एवञ्च पूर्वार्धे तत्पदापेक्षापि न ।

कौमोदकी —

कौमोदकी नाम हरेर्गदाहं-
माज्ञावशात् (प्राक्) सरयूं प्रमथ्य ।
मया हतानां युधि दानवानां
‡प्रपीडितं शोणितनिम्नगासु ॥ २४ ॥

शङ्खः —

(शङ्खोऽहमस्मि) क्षीरोदाद् विष्णुना स्वयमुद्धृतः ।
मम शब्देन नश्यन्ति युद्धे ते देवशत्रवः ॥ २५ ॥

नन्दकः —

नन्दकोऽहं न मे कश्चित् सङ्ग्रामेष्वपराङ्मुखः ।
गच्छामि स्मृतमात्रेण विष्णुना प्रभविष्णुना ॥ २६ ॥

¶(श?च)क्रः —

चक्रशार्ङ्गगदाशङ्खनन्दका दैत्यमर्दनाः ।
वासुदेवस्य कार्यार्थं प्राप्ताः पारिषदा वयम् ॥ २७ ॥

तस्मादागम्यताम् । वयमपि मनुष्यलोकमवतीर्णस्य भगवतो विष्णोर्बालचरितमनुचरितुं गोपालकवेषप्रच्छन्ना घोषमेवावतरिष्यामः ।

सर्वे — तथास्तु । (विष्णुमुपस्थिताः)

---

‡ 'प्रक्रीडितम्' इति वा पाठः संभाव्यते । ¶ शकस्याप्रवेशेन शकारलेखनं लेखकप्रमादायातमेव ।

**वसुदेवः**—वयस्य! बाल एव नमस्यताम्।

**नन्दगोपः**—(क) भट्टा! तह। ळाअदाळअ! ण मो दे णमो दे। ही, (दिहळ होहि दूरत्तणय्येव अत्ताणं णिव्याभेभि?)† गोपजणष्ष तुमं गह्णिदुं को बळपळक्कमो।

**(श?च)क्रः**—नमो भगवते नारायणाय। भगवन्! महाविष्णो!

कार्याण्यकार्याण्य(खिला)मराणां
त्वया भविष्यन्ति ब(ल?ला)नि लोके।
तस्माज्जनस्यास्य लघुत्वयोगात्
कुरु प्रसादं यदुवंशकेतो! ॥ २८ ॥

**वसुदेवः**—गृह्यताम्।

**नन्दगोपः**—(ख) जं भट्टा आणवेदि। (गृह्णाति)

**वसुदेवः**—वयस्य! प्रभाता रजनी। प्रतिनिवर्ततां भवान्।

---

(क) भर्तः! तथा। राजदारक! नमस्ते नमस्ते। ही, (दि....!) गोपजनस्य त्वां ग्रहीतुं को बलपराक्रमः।

(ख) यद् भर्ताज्ञापयति।

---

† धनूरेखान्तर्गतस्य वाक्यस्य स्थाने 'अदिळहू होहि। जरत्तिणम्मिव अत्ताणं णिव्बाहेहि' इति पाठः स्यादिति भाति। 'अतिलघुर्भव। जरत्तृणमिवात्मानं निर्वाहय' इति च संस्कृतम्।

**नन्दगोपः**—(क) अच्छलीअं अच्छलीअं भट्टा! अच्छलीअं। इमे बन्धणे पडिदे ।

**वसुदेवः**—सर्वमेतत् कुमारस्य प्रभावः । प्रतिनिवर्ततां भवान्।

**नन्दगोपः**—(ख) जं भट्टा आणवेदि ।

**वसुदेवः**—अथवा एहि तावत् ।

**नन्दगोपः**—(ग) भट्टा ! अअह्मि ।

**वसुदेवः**—

जाने नित्यं वत्सलं त्वां प्रकृत्या
स्नेहोऽप्यस्मिन्नर्थ्यते रूढभावः ।
अस्मिन् काले दग्धभूयिष्ठशेषं
न्यस्तं बीजं रक्षितुं यादवानाम् ॥ २१॥

कुमारस्य किं करिष्यति भवान् ।

**नन्दगोपः**—(घ) सुणादु भट्टा । एकस्सिं गेहे गच्छिअ खीरं पिबइ, अण्णस्सिं गेहे गच्छिअ दधिं भक्खइ । अपरस्सिं

---

(क) आश्चर्यमाश्चर्यं भर्तः ! आश्चर्यम् । इमे बन्धने पतिते ।

(ख) यद् भर्ताज्ञापयति ।

(ग) भर्तः! अयमस्मि ।

(घ) शृणोतु भर्ता । एकस्मिन् गेहे गत्वा क्षीरं पिबति । अन्यस्मिन् गेहे

गेहे गच्छिअ णवणीदं गिळइ । अण्णर्षिं गेहे गच्छिअ पाअसं भुञ्जइ । इदळर्षिं गेहे गच्छिअ तक्कघटं पळोअदि । किं बहुणा, अह्माणं घोषष्ष पदी होइ ।

वसुदेवः—एवमस्तु । प्रतिनिवर्ततां भवान् ।

**नन्दगोपः**—(क) जं भट्टा आणवेदि । (निष्क्रान्तः)

वसुदेवः—ननु निर्गतो नन्दगोपः । यावदहमपि मधुरामेव यास्यामि । (परिक्रम्य) रुदितशब्द इव श्रूयते । किन्नुखलु कंसभयात् प्रतिनिवृत्तो नन्दगोपः । (परिक्रम्य) अये प्रत्यागतप्राणेयं दारिका । यावदिमां गृहीत्वा देवक्या हस्ते निक्षिप्य दुरात्मानं कंसं वञ्चयामि । (गृहीत्वा) अहो गुरुत्वमस्याः । एतदपि कुमारात् किञ्चिदन्तरं महद् भूतम् । यावदपक्रामामि । अये इयं भगवती यमुना तथैव स्थिता । यावदपक्रामामि । निष्क्रान्तोऽस्मि यमुनायाः । एतन्नगरद्वारम् । तथैव प्रसुप्तो मधुरायां सर्वो जनः । यावत् प्रविशामि । (प्रविश्य) इदं खलु दुरात्मनः कंसस्य गृहं ज्येष्ठाश्रितमिव दृश्यते । इदमस्मदीयं गृहं श्रियारूढमिव दृश्यते । यावदहमप्यन्तःपुरं प्रविश्य देवकीं समाश्वासयामि । ईश्वराः स्वस्ति कुर्वन्तु । (निष्क्रान्तः)

प्रथमोऽङ्कः ।

---

गत्वा दधि भक्षयति । अपरस्मिन् गेहे गत्वा नवनीतं गिलति । अन्यस्मिन् गेहे गत्वा पायसं भुङ्क्ते । इतरस्मिन् गेहे गत्वा तक्रघटं प्रलोकते । किं बहुना, अस्माकं घोषस्य पतिर्भवति ।

(क) यद् भर्ताज्ञापयति ।

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशन्ति चण्डालयुवतयः)

**सर्वाः** — (क) आअच्छ भट्टा ! आअच्छ । अह्माणं कण्णाणं तुए सह विवाहो हो(दि॑दु) ।

(ततः प्रविशति राजा)

**राजा** — भोः ! किन्नुखल्विदम् ।

यन्मेदिनी प्रचलिता पतिताग्रहर्म्या
सन्तारनौरिव विकीर्णमहोर्मिमाला ।
सेव्यैः प्रधानगुणकर्मफलैर्निमित्तैः
किं वाग्रतो व्यसनमभ्युदयो नु तन्मे ॥ १ ॥

**सर्वाः** — (ख) आअच्छ भट्टा ! आअच्छ । अह्माणं कण्णआणं तुए सह विवाहो हो(दि॑दु) ।

**राजा** —

यस्मान्न रक्षिपुरुषाः प्रचरन्ति केचिद्
यस्मान्न दीपकधराः प्रमदाश्चरन्ति ।

---

(क) आगच्छ भर्तः ! आगच्छ । अस्माकं कन्यानां त्वया सह विवाहो भवतु ।

(ख) आगच्छ भर्तः ! आगच्छ । अस्माकं कन्यकानां त्वया सह विवाहो भवतु ।

तस्मादिमा मम गृहं समनुप्रविष्टा
नीलोत्पलाञ्जननिभा भयदाः श्वपाक्यः ॥ २ ॥

**सर्वाः**—(क) आअच्छ भट्टा! आअच्छ। अह्माणं कण्णआणं तुए सह विवाहो होदु।

**राजा**—अहो धृष्टाः खल्वेताश्चण्डालयुवतयः—

क्रोधेन नश्यति सदा मम शत्रुपक्षः
सूर्यः शशी हुतवहश्च वशे स्थिता मे।
योऽहं यमस्य च यमो भयदो भयस्य
तं मापवादवचनैः परिधर्षयन्ति ॥ ३ ॥

**सर्वाः**—(ख) आअच्छ भट्टा! आअच्छ।

**राजा**—आ अपध्वंसाः। कथं सहसैव नष्टाः। यावदिदानीमभ्यन्तरमेव प्रविशामि।

(ततः प्रविशति शापः)

**शापः**—हं, केदानीं प्रविशसि। इदं खलु मम गृहं संवृत्तम्।

**राजा**—

कोऽयं विनिष्पतति गर्भगृहं विगाह्य†
उल्कां प्रगृह्य सहसाञ्जनराशिवर्णः।

---

(क) आगच्छ भर्तः! आगच्छ। अस्माकं कन्यकानां त्वया सह विवाहो भवतु।

(ख) आगच्छ भर्तः! आगच्छ।

---

† अत्र विसन्धिता द्रष्टव्या।

भीमोग्र(दष्ट?दंष्ट्र)वदनो ह्यहिपिङ्गलाक्षः
क्रोधो महेश्वरमुखादिव गां प्रपन्नः ॥४॥

को भवान् ।

शापः—किं न जानीषे माम् । अहं खलु मधूकस्य ऋषेः शापो वज्रबाहुर्नाम ।

श्मशानमध्यादहमागतोऽस्मि
चण्डालवेषेण विरूपचण्डम् ।
कपालमालातिविचित्रवेषः
कंसस्य राज्ञो हृदयं प्रवेष्टुम् ॥५॥

कंसः—असम्भाव्यमर्थं प्रार्थयसि ।

सौवर्णकान्ततरकन्दरकूटकुञ्जं
मेरुं न कम्पयति वायसपक्षवातः ।
हास्योऽसि भोः! समकरक्षुभितोर्मिमालं
पातुं य इच्छसि कराञ्जलिना समुद्रम् ॥६॥

शापः—काले ज्ञास्यसि ।

राजा—हं, कथं सहसैव नष्टः । यावदहमपि शयनमुपगम्य नयनव्याक्षेपं करोमि । (स्वपिति)

शापः—अये प्रसुप्तः । अलक्ष्मि ! खलति ! कालरात्रि ! महानिद्रे ! पिङ्गलाक्षि ! तदागम्यतामभ्यन्तरं प्रविशामः ।

सर्वाः — (क) एवं होदु ।

(प्रविश्य)

राजश्रीः — न खलु प्रवेष्टव्यम् ।

शापः — का भवती ।

श्रीः — किं मां न जानीषे । अहं खल्वस्य लक्ष्मीः ।

शापः — एवम् । राजश्रीः ! अपक्रामतु भवती । इदं खलु मम गृहं संवृत्तम् ।

श्रीः — हं,

लङ्कोपमं मम गृहं ‡नविचिन्त्य मूढ !
कस्याश्रयाद् विशसि मामवधूय रात्रौ ।
किं भाषितेन बहुना न च शक्यमेतद्
द्रष्टुं प्रवेष्टुमिह† तेऽद्य मयाभिजुष्टम् ॥ ७ ॥

शापः — भगवति ! पद्मालये ! अपक्रामतु किल कंसशरीरात् । विष्णुराज्ञापयति ।

श्रीः — कथं विष्णुराज्ञापयतीति भोः ! कष्टम् ।

न चाहं चिरसंवासात् त्यक्तुं शक्नोमि पार्थिवम् ।
बलवान् गुणसङ्ग्राहो दृढं तपति मामयम् ॥ ८ ॥

---

(क) एवं भवतु ।

---

‡ नविचिन्त्येति नशब्दसमासः । † 'इह' इत्यस्य स्थाने 'अपि' इति स्यात् ।

भवतु। अनतिक्रमणीया विष्णोराज्ञा। तस्मादहमपि विष्णुसकाशमेव यास्यामि। (निष्क्रान्ता)

**शापः** — अपक्रान्ता राजश्रीः। हन्तेदानीमिदमस्माकमावासः संवृत्तः। अलक्ष्मि! खलति! कालरात्रि! महानिद्रे! पिङ्गलाक्षि! अभ्यन्तरं प्रविश्य स्वजातिसदृशी क्रीडा क्रियताम्।

**सर्वाः** — (क) अज्जप्पहुदि अवणीदधम्मचारित्तो होहि।

**शापः** —

परिष्वजामि गाढं त्वां नित्याधर्मपरायणम्।
प्राप्नोमि मुनिशापस्त्वामचिरान्नाशमेष्यसि ॥ ९ ॥

(अन्तर्हितः)

(प्रविश्य)

**प्रतिहारी** — (ख) जेदु भट्टा।

**राजा** — ह।

**प्रतिहारी** — (ग) भट्टा! जसोधरा खु अहं।

**राजा** — यशोधरे! किं त्वया मातङ्गीजनप्रवेशो न दृष्टः।

---

(क) अद्यप्रभृत्यपनीतधर्मचारित्रो भव।

(ख) जयतु भर्ता।

(ग) भर्तः! यशोधरा खल्वहम्।

**प्रतिहारी**—(क) हं मादङ्गिजणत्ति । णिच्चं भट्टिपादमूळे वत्तमाणस्स व जणस्स इह प्पवेसो दुळ्ळहो, किं उण मादङ्गि-जणस्स ।

**राजा**—किं स्वप्नो नु मयानुभूतः । यशोधरे! गच्छ । बालाकिः काञ्चुकीयः प्रवेश्यताम् ।

**प्रतिहारी**—(ख) जं भट्टा आणवेदि । (निष्क्रान्ता)

(ततः प्रविशति काञ्चुकीयः)

**काञ्चुकीयः**—जयतु महाराजः ।

**राजा**—आर्य! बालाके! प्र(ष्ट ?)ष्टव्यौ सांवत्सरिकपुरो-हितौ—अद्य रात्रौ वातोद्भ्रामभूमिकम्पोल्कापाता दैवत-(प्रमाद ?)प्रतिभासिताः किमर्थमिति ।

**काञ्चुकीयः**—*महाराज! सांवत्सरिकपुरोहितौ विज्ञापयतः।

**राजा**—किमिति ।

**काञ्चुकीयः**—श्रूयताम् ।

भूतं नभस्तलनिवासि नरेन्द्र! नित्यं
कार्यान्तरेण नरलोकमिह प्रपन्नम् ।

---

(क) हं मातङ्गीजन इति । नित्यं भर्तृपादमूले वर्तमानस्यैव जनस्येह प्रवेशो दुर्लभः, किं पुनर्मातङ्गीजनस्य ।

(ख) यद् भर्ताज्ञापयति ।

---

* इतः प्राक् 'तथा । (निष्क्रम्य पुनः प्रविश्य,)' इत्यपेक्षितं भाति ।

आकाशदुन्दुभिरवैः समहीप्रकम्पै-
स्तस्यैष जन्मनि विशेषकरो विकारः ॥ १० ॥

**राजा**—

कस्मिञ्जाते सशैलेन्द्रा कम्पितेयं वसुन्धरा ।
ज्ञायतां कस्य *(पुत्रेति ?) किं वा जन्मप्रयोजनम् ॥ ११ ॥

इति ।

**काञ्चुकीयः**—यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः । $(अनृतं नाभिहितपूर्वं मया । भवतो भृत्यवर्गपरिवृताया धात्री हस्ते दृष्टा सा ?)

**राजा**—अथवा ब्राह्मणवचनमनृतमपि सत्यं पश्यामि । गच्छ, वसुदेवस्तावदाहूयताम् ।

**काञ्चुकीयः**—यदाज्ञापयति महाराजः । (निष्क्रान्तः)

**राजा**—धर्मशीलः सत्यवादी वसुदेवः । अथ तु मम समीपेऽनृतं न ब्रवीति । भवतु, श्रोष्यामस्तावत् ।

---

* 'पुत्रोऽभूद्' इति स्यात् ।

$ अस्य धनूरेखान्तर्गतस्य पाठस्य स्थाने एवं पाठः कर्तव्यो भाति—

" भट्टिन्या देवक्या दारिका प्रसूता ।

**राजा** — अपि सत्यम् ।

**काञ्चुकीयः** — महाराज! अनृतं नाभिहितपूर्वं मया । भृत्यवर्गपरिवृताया धात्र्या हस्ते दृष्टा सा । " इति ।

(ततः प्रविशति वसुदेवः)

**वसुदेवः**—

षण्णां सुतानां समुपेत्य नाशं
वहन्निदं शोककृशं शरीरम् ।
आहूयमानोऽकरुणेन राज्ञा
गच्छाम्यहं भृत्य इवास्वतन्त्रः ॥ १२ ॥

भोः! एवंविधा लोकवृत्तिः ।

स्मरतापि भयं राजा भयं नस्मरतापि वा ।
उभाभ्यामपि गन्तव्यो भयादप्यभयादपि ॥ १३ ॥

(उपसृत्य) शौरसेनीमातः! आस्यते ।

**राजा**—यादवीमातः! आस्यताम् ।

**वसुदेवः**—बाढम् । (उपविश्य) शौरसेनीमातः! किमर्थं वयमाहूताः ।

**राजा**—यादवीमातः! प्रसूतवती किल देवकी ।

**वसुदेवः**—अथकिम्, प्रसूतवती ।

**राजा**—किं प्रसूतम् ।

**वसुदेवः**—(आत्मगतम्) मयापि नामानृतं वक्तव्यं भविष्यति । अथवा कुमाररक्षणार्थमनृतमपि सत्यं पश्यामि । किमिदानीं करिष्ये । भवतु, दृष्टम् । (प्रकाशम्) दारिका प्रसूता तया ।

**राजा**—

दारिका वा कुमारो वा हन्तव्यः सर्वथा मया ।
दैवं पुरुषकारेण वञ्चयिष्याम्यहं ध्रुवम् ॥ १४ ॥

(प्रविश्य)

**प्रतिहारी**—(क) जेदु भट्टा । अह्माअं भट्टिणी विण्णवेदि—दारिअत्ति बाळेत्ति अ करीअदु किळ महाराएण अणुक्कोसो ।

**वसुदेवः**—शौरसेनीमातः! क्रियतां तपस्विन्या देवक्या वाक्यम् । दारिकासु स्त्रीणामधिकतरः स्नेहो भवति ।

**राजा**—किं भवान् स्मरति समयम् ।

मधूकस्य ऋषेः शापं श्रुत्वा मे समयस्तदा ।
देवक्या धारितान् गर्भान् दास्यामीति य(या?था) कृतः ॥१५॥

**वसुदेवः**—समय इति । एष न व्याहरामि ।

**प्रतिहारी**—(ख) भट्टा! किं त्ति अह्माअं भट्टिणीए णिवेदिदव्वं ।

**राजा**—यशोधरे! उच्यतां देवक्याः—न युक्तमिदानीं निर्बन्धमभिधातुम् । अन्यत् प्रियतरं करिष्यामीति ।

---

(क) जयतु भर्ता । अस्माकं भट्टिनी विज्ञापयति—दारिकेति बालेति च क्रियतां किल महाराजेनानुक्रोशः ।

(ख) भर्तः! किमित्यस्माकं भट्टिन्यै निवेदयितव्यम् ।

**प्रतिहारी** — (क) जं भट्टा आणवेदि ।

**राजा** — यशोधरे ! एवं क्रियताम् ।

**प्रतिहारी** — (ख) सुहं पविसदु किळ भट्टा ।

**वसुदेवः** — विविक्तमिच्छता मयापि नाम परापत्यं निधनमुपनेतव्यं भवति । किन्नुखलु कुमारमेवानीय प्रयच्छामि । अथवा,

दारिकेयं मृता पूर्वं पुनरेव समुत्थिता ।
अस्य बालस्य माहात्म्यान्नैषा वधमवाप्स्यति ॥ १६ ॥

यावदहमपि देवकीं समाश्वासयामि । (निष्क्रान्तः)

**राजा** — यशोधरे ! प्रवेश्यतां सा दारिका ।

**प्रतिहारी** — (ग) जं भट्टा आणवेदि । (निष्क्रान्ता)

(ततः प्रविशति दारिकां गृहीत्वा धात्री रक्षिपुरुषाश्च)

**सर्वे** — (घ) सणिअं सणिअं अय्या । इदं मज्झमदुवाळं । पविसदु अय्या ।

**धात्री** — (प्रविश्य) (ङ) जेदु भट्टा । इअं दारिआ अह्मेहि चिरप्पहुदि रक्खिदा ।

---

(क) यद् भर्ताज्ञापयति ।
(ख) सुखं प्रविशतु किळ भर्ता ।
(ग) यद् भर्ताज्ञापयति ।
(घ) शनैः शनैरार्या । इदं मध्यमद्वारम् । प्रविशत्वार्या ।
(ङ) जयतु भर्ता । इयं दारिकास्माभिश्चिरात् प्रभृति रक्षिता ।

**राजा**—अहो राजदर्शनीयेयं दारिका । मयापि नाम स्त्रीवधः कर्तव्यो भवति ।

**धात्री**—(क) सणिअं सणिअं भट्टा ! ।

**राजा**—इयं कंसशिला । यावत् साहसमनुष्ठास्यामि ।

अयं हि सप्तमो गर्भ ऋषिशापबलोत्थितः ।
अस्मिन् नाशं गते गर्भे मम शान्तिर्भविष्यति ॥ १७ ॥

(गृहीत्वा प्रहृत्य) अये,

एकांशपतितो भूमावेकांशाद् दिवमुन्नतः ।
मां निहन्तुमिहोद्भूतः करैः शस्त्रसमुज्ज्वलैः ॥ १८ ॥

अये इयमिदानीं,

तीक्ष्णाग्रं शूलमालम्ब्य रौद्रवेषेण जृम्भते ।
विनाशकाले सम्प्राप्ते कालरात्रिरिवोत्थिता ॥ १९ ॥

(ततः प्रविशति §कात्यायनी सपरिवारा)

**कात्यायनी**—

सुम्भं निसुम्भं महिषं च हत्वा
कृत्वा सुरा(णां ?ना)हतशत्रुपक्षान् ।

---

(क) शनैः शनैः भर्तः ! ।

---

§ कृतस्य शुभाशुभस्य कर्म कात्यं, तद् आययति प्रापयतीति कर्तरि ल्युट् । टित्त्वाद् ङीप् । पुण्यपापफलदात्रीत्यर्थः । योगरूढश्चायं गौर्यां कात्यायनीशब्दः ।

